प्रकारकत्वमखण्डार्थनिष्ठत्वमित्यपि कल्पनाप्रसङ्गात् । न द्वितीयः । इहेति ब्रह्मचिन्मात्रमनूद्य तत्र सर्वं निषेधयन्त्या श्रुते निर्विशेषार्थत्वरूपाखण्डत्वस्यैव प्रापकत्वात् । नच तदपि । एतच्छ्रुतिसिद्धसर्वाभावरूपविशेषभावाभावाभ्यां व्याहतेरेव । भेदाभावे कथं सत्यत्वादिवैशिष्ट्यम् विशेषणविशेष्यभावस्य भेदघटितत्वादिति तु अभेदवैशिष्ट्येऽपि समम् । विशेषसमर्थनेन शङ्कानवकाशाच्च । कार्यकारणनिष्ठवाक्यानामप्यभिन्नार्थनिष्ठत्वेनाखण्डार्थनिष्ठवाक्यस्यैवाभावप्रसङ्गाच्च । भेदोऽप्यस्तीति चेत् किं तेन । अभिन्नार्थनिष्ठत्वस्य तथाप्यप्रतिघातात् । लाघवात्तावन्मात्रस्यैवाखण्डार्थत्वोपयोगित्वसंभवाच्च । किंच न तावज्जीवत्वविशिष्टचैतन्यस्य ब्रह्माभेदः । विरोधात् । नापि तदुपलक्षितचैतन्यस्य । उपलक्षकस्यापि काकादेरिव व्यावर्तकत्वावश्यंभावेनैक्यविरोधित्वात् । नहि काकोपलक्षितगृहस्य तदनुपलक्षितगृहांतरैक्यं दृष्टम् । तस्माज्जीवत्वं यत्रारोपितं तस्यैव चैतन्यस्यैक्यं वाच्यम् । तच्च न परस्याप्यनिष्टम् । जीवे जीवत्वारोपासंभवेन कृष्णरामादिष्वेवाज्ञदृष्ट्या तदारोपो वक्तव्यः । तस्य च ब्रह्मैक्यं कस्यानिष्टम् । अपिच यच्छब्दतच्छब्दयोर्हेत्वर्थकयोः सर्वजनसिद्धत्वात् हे श्वेतकेतो त्वं तत्तस्मात् ब्रह्मणो हेतोरसीति अत एवैतदात्म्यमित्युक्तब्रह्मकारणकत्वार्थकस्य मुख्यस्यैव संभवात् किमनया लक्षणया । किंच पदद्वयलक्षणातोप्येकपदलक्षणाया एव लघुत्वात् । हे श्वेतकेतो त्वं तत तदधीनोऽसीत्यर्थसंभवात् किमनेन द्वासुपर्णेत्यादिश्रुतिविरुद्धार्थेन । नच सा प्रत्यक्षसिद्धभेदानुवादिनीति वाच्यम् । तथापि भेदरूपार्थस्यापरिक्षयात् । नहि प्रत्यक्षसिद्धमग्नेर्हिमभेषजत्वं श्रुत्याऽनूदितमिति नासौ हिमभेषजम् । किंचानुवादमात्रेणाप्रामाण्यमुत दूषणार्थमनुवादेन । नाद्य । स्वोक्तस्थिरीकरणाय साक्षिवाक्यानुसरणस्य सर्वैं क्रियमाणत्वात् । न द्वितीयः । इति यत् तन्नेति तल्लिंगाभावात्प्रत्युत "तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति" इति विरुद्धधर्मकथनेन तस्यैव दृढीकरणात् । न ह्येतदप्यनुवादार्हम् । "अनश्नन्नन्यो अभिचाकशीती"त्यस्य प्रत्यक्षासिद्धत्वात् । "अन्यमीशमस्य महिमानमिति वीतशोक" इति अन्यत्वज्ञानेन दुःखनिवृत्तिरूपमोक्षफलश्रवणाच्च न दूषणार्थमनुवादोऽयम् । ऐक्यवाक्यस्याद्याप्यनिर्णीतार्थत्वेन दूषणाभावाच्च । तस्याप्युक्तरीत्या स्वरसमयप्राप्तैक्यानुवादकत्वसंभवाच्च ।

भ्रातनिषेधकवाक्यस्य प्रत्यक्षानुगृहीताभ्रातविधायकवाक्यमिव प्रत्यक्षानुगृहीतभेद-वाक्यमेव च तद्दूषकमस्तु । नाप्यविद्यावच्छिन्नचैतन्यनिष्ठाविद्यकभेदपरा सेति वाच्यम् । "न यत्र माया किमुतापरे हरेरनुव्रता यत्र सुराऽसुरार्चिता."इति माया-निवृत्तिदशायामपि भेदस्य श्रूयमाणत्वात् । नच बहुतरमायानिवृत्तिपरं तद्वाक्यम् । अल्पीयसी तु माया तत्राप्यस्तीति वाच्यम । घटत्वावच्छेदकावच्छिन्नयत्किंचि त्सद्भावे रक्तघटो नास्तीति विशिष्य निषेधसंभवेप्यत्र घटो नास्तीति सामान्यनि-षेधादर्शनेन मायात्वावच्छेदकावच्छिन्नयत्किंचित्सद्भावे न यत्र मायेति सामान्य-निषेधासंभवात् । "किमुतापर"इति मायानिमित्तककामक्रोधाद्यभावे कैमुत्यं वदता सर्वथा मायाभावस्य प्रागवक्तव्यत्वाच्च । किंच लक्षणायां साक्षाद्गृहीतसङ्गतिक पदार्थस्यैव परित्यागः । गङ्गापदेन प्रवाहं परित्यज्य तीरस्यैव व्यपदेशान्मुख्यार्थ योगस्य प्रयोजनस्यैव लक्षणोपयोगिन पदबोध्यताभावात् । गौण्या त्वेकविभक्ति-कत्वरूपसामानाधिकरण्यार्थस्य तदानीमेव पदान्तरसमागमवशाद्विशिष्य ग्राह्य-स्यैक्यमात्रस्य प्रच्यावनम् । नतु सिंहदेवदत्तयोरपि । तथाच साक्षात्पदार्थप्रच्या-वनरूपतल्लक्षणातोऽपि विभक्त्यर्थमात्रप्रच्यावनरूपगौण्याश्रयणस्यैवोचितत्वात् । तत्त्वं तत्सदृशोऽसीति परमं साम्यमुपैतीत्यादौ निरूपितब्रह्मसादृश्यपरमेवेदं वाक्य-मस्तु । एवंच "स्तब्ध एवासीति"ति तत्रैवोक्त श्वेतकेतोस्स्तब्धत्वं उद्दालकाख्य-गुरूपसत्तिस्तन्मुखात् श्रवणं ब्रह्मभजकतापसत्वं च युक्तमेव स्यात् । साक्षात्सर्वज्ञ-ब्रह्मरूपत्वे तु कथमिदं युज्येत । तस्मात्स्वरूपोच्छेदकजगन्मिथ्यात्वे न काचिदपि श्रुति प्रमाणम् ॥ * ॥

इति श्रीमद्वादिराजयतिकृतं विवरणव्रणं समाप्तम् ॥

॥ श्रीमद्धनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीव प्रीयताम् ॥

॥ श्रीकृष्णार्पणमस्तु ॥

॥ श्रीः ॥

श्रीमद्वादिराजीयग्रन्थप्रकाशनसमितौ सदस्याः

१. न्यायविद्वान् तर्ककेसरी इत्यादि बिरुदविराजमाना पडम्नूरु नारायणाचार्याः उडुपि श्रीमन्मध्वसिद्धान्तप्रबोधिनी संस्कृतमहापाठशालायां वेदान्तप्रधान पण्डिताः समितिप्रधानाध्यक्षाः

२. वेदान्तरत्नं प्रवचनधुरीण इत्यादिबिरुदभाजः कट्टे श्रीनिवासाचार्याः श्रीमदुत्तरादिमठीय उडुपि श्रीमन्मध्वसिद्धान्तचन्द्रिकापाठशालायाः प्रधानपण्डिताः समित्यध्यक्षाः

३ श्री पेजावरमठीय प्रधानसचिव श्रीमन्निम्मयाळ नारायणाचार्याः कोशाध्यक्षाः

४. द्वैतवेदान्तविद्वान् वेदान्तशिरोमणि अग्रहार नारायण तन्त्रिणः उडुपि श्रीमन्मध्वसिद्धान्त प्रबोधिनी संस्कृतमहापाठशालायां वेदान्तपण्डिताः कार्यदर्शिन

५. साहित्यशिरोमणि विद्याभूषण वि. श्रीनिवास भट्टाः उडुपि श्रीमन्मध्वसिद्धान्तप्रबोधिनी संस्कृतमहाशालायां साहित्यप्रधानपण्डिताः उपकार्यदर्शिन

Printed by K. Raghavendra Rao, at Majestic Press, Udipi & Published by Sri A. Narayana Tantry Secretary Sri Vadirajiya Grantha Prakashana Samithi, Udipi.